# परमार्थसारम्

https://sa.wikisource.org/s/83r

।।श्रीमदादिशेषप्रणीतम् परमार्थसारम् ।।

।।श्रीः ।।

।।अथ परमार्थसारम् ।।

ॐ

परं परस्याः प्रकृतेरनादिमेकं निविष्टं बहुधा गुहासु. सर्वालयं सर्वचराचरस्थं त्वामिव विष्णुं शरणं प्रपद्ये ।।[ Note 1]

।।श्रीः ।।

श्रीमदादिशेषप्रणीतम्

।।परमार्थसारम् ।।

ॐ

आत्माम्बुराशौ निखिलोऽपि लोको मग्नोऽपि नाचामति नेक्षते च.
आश्चर्यमेतन्मृगतृष्णिकाभे भवाम्बुराशौ रमते मृषैव ।।[ Note 2]
गर्भगृहवाससम्भवजन्मजरामरणविप्रयोगाब्धौ.
जगदालोक्य निमग्नं प्राह गुरुं प्राञ्जलिः शिष्यः ।।१।।
त्वं साङ्गवेदवेत्ता भेत्ता सँशयगणस्यर्तवक्ता.
सँसारार्णवतरणप्रश्नं पृच्छाम्यहं भगवन् ।।२।।
दीर्घेऽस्मिन्सँसारे सँसरतः कस्य केन सम्बन्धः.
कर्म शुभाशुभफलदमनुभवति नु गतागतैरिह कः ।।३।।
कर्मगुणजालबद्धो जीवः सँसरति कोशकार इव.
मोहान्धकारगहनात्तस्य कथं बन्धनान्मोक्षः ।।४।।
गुणपुरुषविभागज्ञे धर्माधर्मौ न बन्धकौ भवतः.
इति गदितपूर्ववाक्यैः प्रकृतिं पुरुषं च मे ब्रूहि ।।५।।
इत्याधारो भगवान्पृष्टः शिष्येण तं स होवाच.
विदुषामप्यतिगहनं वक्तव्यमिदं शृणु तथापि त्वम् ।।६।।
सत्यमिव जगदसत्यं मूलप्रकृतेरिदं कृतं येन.
तं प्रणिपत्योपेन्द्रं वक्ष्ये परमार्थसारमिदम् ।।७।।
अव्यक्तादण्डमभूदण्डाद्ब्रह्मा ततः प्रजासर्गः.
मायामयी प्रवृत्तिः संहृयत इयं पुनः क्रमशः ।।८।।
मायामयोऽप्यचेता गुणकरणगणः करोति कर्माणि.
तदधिष्ठाता देही स चेतनोऽपि न करोति किञ्चिदपि ।।९।।
यद्वच्चेतनमपि सन्निकटस्थे भ्रामके भ्रमति लोहम्.
तद्वत्करणसमूहश्चेष्टति चिदधिष्ठिते देहे ।।१०।।
यद्वत्सवितर्युदिते करोति कर्माणि जीवलोकोऽयम्.
न च तानि करोति रविर्न कारयति तद्वदात्मापि ।।११।।
मनसोऽहङ्कारविमूर्च्छितस्य चैतन्यबोधितस्येह.

पुरुषाभिमानसुखदुःखभावना भवति मूढस्य ।।१२।।
कर्ता भोक्ता द्रष्टास्मि कर्मणामुत्तमादीनाम्.
इति तत्स्वभावविमलोऽभिमन्यते सर्वगोऽप्यात्मा ।।१३।।
नानाविधवर्णानां वर्णं धत्ते यथामलः स्फटिकः.
तद्वदुपाधेर्गुणभावितस्य भावं विभुर्धत्ते ।।१४।।
आदर्शे मलरहिते यद्वद्रूपं विचिन्वते लोकाः.
आलोकयति तथात्मा विशुद्धबुद्धौ स्वमात्मानम् ।।१५।।[ Note 3 ]
गच्छति गच्छति सलिले दिनकरबिम्बं स्थिते स्थितिं याति.
अन्तःकरणे गच्छति गच्छत्यात्मापि तद्वदिह ।।१६।।
राहुरदृश्योऽपि यथा शशिबिम्बस्थः प्रकाशते जगति.
अन्तःकरणे गच्छति गच्छत्यात्मापि तद्वदिह ।।१७।।
सर्वगतं निरुपममद्वैतं तच्चेतसा गम्यम्.
यद्बुद्धिगतं ब्रह्मोपलभ्यते शिष्य बोध्यं तत् ।।१८।।
बुद्धिमनोऽहङ्कारास्तन्मात्रेन्द्रियगणाश्च भूतगणः.
सँसारसर्गपरिरक्षणक्षमा प्राकृता हेयाः ।।१९।।
धर्माधर्मौ सुखदुःखकल्पना स्वर्गनरकवासश्च.
उत्पत्तिनिधनवर्णाश्रमा न सन्तीह परमार्थे ।।२०।।
मृगतृष्णायामुदकं शुक्तौ रजतं भुजङ्गमो रज्ज्वाम्.
तैमिरिकचन्द्रयुगवद्भ्रान्तं निखिलं जगद्रूपम् ।।२१।।
यद्वद्दिनकर एको विभाति सलिलाशयेषु सर्वेषु.
तद्वत्सकलोपाधिष्ववस्थितो भाति परमात्मा ।।२२।।
खमिव घटादिष्वन्तर्बहिः स्थितं ब्रह्म सर्वपिण्डेषु.
देहेऽहमित्यनात्मनि बुद्धिः सँसारबन्धाय ।।२३।।
सर्वविकल्पहीनः शुद्धो बुद्धोऽजरामरः शान्तः.
अमलः सकृद्विभातश्चेतन आत्मा खवद्व्यापी ।।२४।।
रसफाणितशर्करिकागुलखण्डा विकृतयो यथैवेक्षोः.
तद्वदवस्थाभेदाः परमात्मन्येव बहुरूपाः ।।२५।।
विज्ञानान्तर्यामिप्राणविराड्देहजातिपिण्डान्ताः.
व्यवहारास्तस्यात्मन्येतेऽवस्थाविशेषाः स्युः ।।२६।।
रज्ज्वां नास्ति भुजङ्गः सर्पभयं भवति हेतुना केन.
तद्वद्द्वैतविकल्पभ्रान्तिरविद्या न सत्यमिदम् ।।२७।।
एतत्तदन्धकारं यदनात्मन्यात्मता भ्रान्त्या.
न विदन्ति वासुदेवं सर्वात्मानं नरा मूढाः ।।२८।।
प्राणाद्यनन्तभेदैरात्मानं संवितत्य जालमिव.
सँहरति वासुदेवः स्वविभूत्या क्रीडमान इव ।।२९।।
त्रिभिरेव विश्वतैजसप्राज्ञैस्तैरादिमध्यनिधनाख्यैः.
जाग्रत्स्वप्नसुषुप्तैर्भ्रमभूतैश्छादितं तुर्यम् ।।३०।।
मोहयतीवात्मानं स्वमायया द्वैतरूपया देवः.
उपलभते स्वयमेवं गुहागतं पुरुषमात्मानम् ।।३१।।
ज्वलनाद्धूमोद्गतिभिर्विविधाकृतिरम्बरे यथा भाति.
तद्वद्विष्णौ सृष्टिः स्वमायया द्वैतविस्तरा भाति ।।३२।।
शान्त इव मनसि शान्ते हृष्टे हृष्ट इव मूढ इव मूढे.
व्यवहारस्थो न पुनः परमार्थत ईश्वरो भवति ।।३३।।
जलधरधूमोद्गतिभिर्मलिनीक्रियते यथा न गगनतलम्.
तद्वत्प्रकृतिविकारैरपरामृष्टः परः पुरुषः ।।३४।।
एकस्मिन्नपि च घटे धूमादिमलावृते शेषाः.
न भवति मलोपेता यद्वज्जीवोऽपि तद्वदिह ।।३५।।
देहेन्द्रियेषु नियताः कर्म गुणाः कुर्वते स्वभोगार्थम्.
नाहं कर्ता न ममेति जानतः कर्म नैव बध्नाति ।।३६।।

अन्यशरीरेण कृतं कर्म भवेद्येन देह उत्पन्नः.
तदवश्यं भोक्तव्यं भोगादेव क्षयोऽस्य निर्दिष्टः ।।[ Note 4 ]
प्राग्ज्ञानोत्पत्ति चितं यत्कर्म ज्ञानशिखिशिखालीढम्.
बीजमिव दहनदग्धं जन्मसमर्थं न तद्भवति ।।३७।।
ज्ञानोत्पत्तेरूर्ध्वं क्रियमाणं कर्म यत्तदपि नाम.
न श्लिष्यति कर्तारं पुष्करपत्रं यथा वारि ।।३८।।
वाग्देहमानसैरिह कर्मचयः क्रियत इति बुधाः प्राहुः.
एकोऽपि नाहमेषां कर्ता तत्कर्मणां नास्मि ।।३९।।
कर्मफलबीजनाशाज्जन्मविनाशो न चात्र सन्देहः.
बुद्ध्वैवमपगततमाः सवितेवाभाति भारूपः ।।४०।।
यद्वदिषीकातूलं पवनोद्धूतं हि दश दिशो याति.
ब्रह्मणि तत्त्वज्ञानात्तथैव कर्माणि तत्त्वविदः ।।४१।।
क्षीरादुद्धृतमाज्यं क्षिप्तं यद्वन्न पूर्ववत्तस्मिन्.
प्रकृतिगुणेभ्यस्तद्वत्पृथक्कृतश्चेतनो नात्मा ।।४२।।
गुणमयमायागहनं निर्धूय यथा तमः सहस्राँशुः.
बाह्याभ्यन्तरचारी सैन्धवघनवद्भवेत्पुरुषः ।।४३।।
यद्वद्देहोऽवयवा मृदेव तस्या विकारजातानि.
तद्वत्स्थावरजङ्गममद्वैतं द्वैतवद्भाति ।।४४।।
एकस्मात्क्षेत्रज्ञाद्बहवः क्षेत्रज्ञजातयो जाताः.
लोहगतादिव दहनात्समन्ततो विस्फुलिङ्गगणाः ।।४५।।
ते गुणसङ्गदोषाद्बद्धा इव धान्यजातयः स्वतुषैः.
जन्म लभन्ते तावद्यावन्न ज्ञानवह्निना दग्धाः ।।४६।।
त्रिगुणा चैतन्यात्मनि सर्वगतेऽवस्थितेऽखिलाधारे.
कुरुते सृष्टिमविद्या सर्वत्र स्पृश्यते तया नात्मा ।।४७।।
रज्ज्वां भुजङ्गहेतुः प्रभवविनाशौ यथा न स्तः.
जगदुत्पत्तिविनाशौ न च कारणमस्ति तद्वदिह ।।४८।।
जन्मविनाशनगमनागममलसम्बन्धवर्जितो नित्यम्.
आकाश इव घटादिषु सर्वात्मा सर्वदोपेतः ।।४९।।
कर्म शुभाशुभफलसुखदुःखैर्योगो भवत्युपाधीनाम्.
तत्सँसर्गाद्बन्धस्तस्करसङ्गादतस्करवत् ।।५०।।
देहगुणकरणगोचरसङ्गात्पुरुषस्य यावदिह भावः.
तावन्मायापाशैः सँसारे बद्ध इव भाति ।।५१।।
मातृपितृपुत्रबान्धवधनभोगविभागसम्मूढः.
जन्मजरामरणमये चक्र इव भ्राम्यते जन्तुः ।।५२।।
लोकव्यवहारकृतां य इहाविद्यामुपासते मूढाः.
ते जन्ममरणधर्माणोऽन्धं तम एत्य खिद्यन्ते ।।५३।।
हिमफेनबुद्बुदा इव जलस्य धूमो यथा वह्नेः.
तद्वत्स्वभावभूता मायैषा कीर्तिता विष्णोः ।।५४।।
एवं द्वैतविकल्पां भ्रमस्वरूपां विमोहनीं मायाम्.
उत्सृज्य सकलनिष्कलमद्वैतं भावयेद्ब्रह्म ।।५५।।
यद्वत्सलिले सलिलं क्षीरे क्षीरं समीरणे वायुः.
तद्वद्ब्रह्मणि विमले भावनया तन्मयत्वमुपयाति ।।५६।।
इत्थं द्वैतसमूहे भावनया ब्रह्मभूयमुपयाते.
को मोहः कः शोकः सर्वं ब्रह्मावलोकयतः ।।५७।।
विगतोपाधिः स्फटिकः स्वप्रभया भाति निर्मलो यद्वत्.
चिद्दीपः स्वप्रभया तथा विभातीह निरुपाधिः ।।५८।।
गुणकरणगणशरीरप्राणैस्तन्मात्रजातिसुखदुःखैः.
अपरामृष्टो व्यापी चिद्रूपोऽयं सदा विमलः ।।५९।।
द्रष्टा श्रोता घ्राता स्पर्शयिता रसयिता ग्रहीता च.

देही देहेन्द्रियधीविवर्जितः स्यान्न कर्तासौ ।।६०।।
एको नैकत्रावस्थितोऽहमैश्वर्ययोगतो व्याप्तः.
आकाशवदखिलमिदं न कश्चिदप्यत्र सन्देहः ।।६१।।
आत्मैवेदं सर्वं निष्कलसकलं यदैव भावयति.
मोहगहनाद्विमुक्तस्तदैव परमेश्वरीभूतः ।।६२।।
यद्यत्सिद्धान्तागमतर्केषु प्रब्रुवन्ति रागान्धाः.
अनुमोदामस्तत्तत्तेषां सर्वात्मवादधिया ।।६३।।
सर्वाकारो भगवानुपास्यते येन येन भावेन.
तं तं भावं भूत्वा चिन्तामणिवत्समभ्येति ।।६४।।
नारयणमात्मानं ज्ञात्वा सर्गस्थितिप्रलयहेतुम्.
सर्वज्ञः सर्वगतः सर्वः सर्वेश्वरो भवति ।।६५।।
आत्मज्ञस्तरति शुचं यस्माद्विद्वान्बिभेति न कुतश्चित्.
मृत्योरपि मरणभयं न भवत्यन्यत्कुतस्तस्य ।।६६।।
क्षयवृद्धिवध्यघातकबन्धनमोक्षैर्विवर्जितं नित्यम्.
परमार्थतत्त्वमेतद्यदतोऽन्यत्तदनृतं सर्वम् ।।६७।।
एवं प्रकृतिं पुरुषं विज्ञाय निरस्तकल्पनाजालः.
आत्मारामः प्रशमं समास्थितः केवलीभवति ।।६८।।
नलकदलिवेणुवाणा नश्यन्ति यथा खपुष्पमासाद्य.
तद्वत्स्वभावभूताः स्वभावतां प्राप्य नश्यन्ति ।।६९।।
भिन्नेऽज्ञानग्रन्थौ छिन्ने सँशयगणेऽशुभे क्षीणे.
दग्धे च जन्मबीजे परमात्मानं हरिं याति ।।७०।।
मोक्षस्य नैव किञ्चिद्धामास्ति न चापि गमनमन्यत्र.
अज्ञानमयग्रन्थेर्भेदो यस्तं विदुर्मोक्षम् ।।७१।।
बुद्ध्वैवमसत्यमिदं विष्णोर्मायात्मकं जगद्रूपम्.
विगतद्वन्द्वोपाधिकभोगासङ्गो भवेच्छान्तः ।।७२।।
बुद्ध्वा विभक्तां प्रकृतिं पुरुषः सँसारमध्यगो भवति.
निर्मुक्तः सर्वकर्मभिरम्बुजपत्रं यथा सलिलैः ।।७३।।
त्यक्त्वा सर्वविकल्पानात्मस्थं निश्चलं मनः कृत्वा.
दग्धेन्धन इव वह्निः सर्वस्यात्मा भवेच्छान्तः ।।७४।।[ Note 5 ]
अश्नन्यद्वा तद्वा संवीतो येनकेनचिच्छान्तः.
यत्र क्वचन च शायी विमुच्यते सर्वभूतात्मा ।।७५।।
हयमेधसहस्राण्यप्यथ कुरुते ब्रह्मघातलक्षाणि.
परमार्थविन्न पुण्यैर्न च पापैः स्पृश्यते विमलः ।।७६।।
मदकोपहर्षमत्सरविषादभयपरुषवर्ज्यवाग्बुद्धिः.
निःस्तोत्रवषट्कारो जडवद्विचरेदगाधमतिः ।।७७।।
उत्पत्तिनाशवर्जितमेवं परमर्थमुपलभ्य.
कृतकृत्यसफलजन्मा सर्वगतस्तिष्ठति यथेष्टम् ।।७८।।
व्यापिनमभिन्नमित्थं सर्वात्मानं विधूतनानात्वम्.
निरुपमपरमानन्दं यो वेद स तन्मयो भवति ।।७९।।
तीर्थे श्वपचगृहे वा नष्टस्मृतिरपि परित्यजन्देहम्.
ज्ञानसमकालमुक्तः कैवल्यं याति हतशोकः ।।८०।।
पुण्याय तीर्थसेवा निरयाय श्वपचसदननिधनगतिः.
पुण्यापुण्यकलङ्कस्पर्शाभावे तु किं तेन ।।८१।।
वृक्षाग्राच्च्युतपादो यद्वदनिच्छन्नरः क्षितौ पतति.
तद्वद्गुणपुरुषज्ञोऽनिच्छन्नपि केवलीभवति ।।८२।।
परमार्थमार्गसाधनमारभ्याप्राप्य योगमपि नाम.
सुरलोकभोगभोगी मुदितमना मोदते सुचिरम् ।।८३।।
विषयेषु सार्वभौमः सर्वजनैः पूज्यते यथा राजा.
भुवनेषु सर्वदेवैर्योगभ्रष्टस्तथा पूज्यः ।।८४।।

महता कालेन महान्मानुष्यं प्राप्य योगमभ्यस्य.
प्राप्नोति दिव्यममृतं यत्तत्परमं पदं विष्णोः ।।८५।।
ॐ
वेदान्तशास्त्रमखिलं विलोक्यादिशेषो जगदाधारः.
आर्यापञ्चाशीत्या बबन्ध परमार्थसारमिदम् ।।[ Note 6 ]

इति भगवदादिशेषप्रणीतं परमार्थसारं सम्पूर्णम् ।।